।। श्रीमद्राघवो विजयतेतराम् ।।
।। श्रीरामानन्दाचार्याय नमः ।।

# केनोपनिषदि
(विशिष्टाद्वैतपरकम्)

# श्रीराघवकृपाभाष्यम्
(संस्कृत-हिन्दी भाष्य सहितम्)

भाष्यकाराः-
जगद्गुरुश्रीरामानन्दाचार्याः
स्वामिरामभद्राचार्यजीमहाराजाः
चित्रकूटीयाः

*प्रकाशक :*
**श्रीतुलसीपीठसेवान्यासः**
तुलसीपीठः, आमोदवनम्
श्रीचित्रकूटधाम, जनपदं-सतना ( म० प्र० )

*प्रकाशक :*

**श्रीतुलसीपीठसेवान्यासः**

तुलसीपीठः, आमोदवनम्,
श्रीचित्रकूटधाम, जनपदं–सतना (म० प्र०)
**दूरभाष :** ०७६७०–६५४७८

✪

**प्रथमसंस्करणम् : ११०० प्रतयः**

✪



✪

**मूल्यम् : ९०.०० रुपया**

✪

*प्राप्तिस्थानम् :*

**तुलसीपीठः,** आमोदवनम्, चित्रकूटं जनपदं–सतना (म० प्र०)
**वसिष्ठायनम्,** (रानीगली) जगद्गुरु रामानन्दाचार्य मार्ग, भोपतवाला, हरिद्वार (उ० प्र०).
**श्रीगीताज्ञानमन्दिर,** भक्तिनगर सर्कल, राजकोट (गुजरात) पिन– ३६०००२

✪

*मुद्रक :*

**राघव ऑफसेट**
वैजनत्था, वाराणसी– १०
**फोन :** ३२००३९

।। श्रीराघवो विजयतेतराम् ।।

# प्रकाशकीयम्

**नीलनीरदसंकाशकान्तये श्रितशान्तये ।**
**रामाय पूर्णकामाय जानकीजानये नमः ।।**

साम्प्रतिकबुद्धिजीविवर्गे पण्डितसमाजे च श्रीवैष्णवसत्समाजे को नाम नाभिनन्दति ? पदवाक्यप्रमाणपारावारीणकवितार्किकचूडामणिसारस्वत-सार्वभौमपण्डितप्रकाण्डपरमहंसपरिव्राजकाचार्यश्रीवैष्णवकुलतिलकत्रिदण्डीश्वर-श्रीचित्रकूटतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्यवाचस्पतिमहामहनीयस्वामिरामभद्राचार्य-महाराजराजिष्णुप्रतिभाधनम् । आचार्यचरणैः श्रीसम्प्रदायश्रीरामानन्दीय-श्रीवैष्णवानुमोदितविशिष्टाद्वैतवादाम्नायमनुसृत्य ईशावास्यादि बृहदारण्यकान्तानामेका-दशोपनिषदां श्रीराघवकृपाभाष्यं प्रणीय भारतीयसंस्कृतवाङ्मयसनातनधर्मावलम्बिनां कियान् महान् उपकारो व्यधायीति तु निर्णेष्यतीतिहासः सोल्लासः । अस्य ग्रन्थरत्नस्य प्रकाशनदायित्वं श्रीतुलसीपीठसेवान्यासाय प्रदाय ऋणिनः कृता वयं श्रीमज्जगद्गुरुभिः वयं तेषां सततमाधमर्ण्यभाजः । अहं धन्यवादं दित्सामि साधुवादं च, वाराणसीस्थाय राघव ऑफसेट मुद्रणालयाध्यक्षाय चन्दनेशाय श्रीविपिनशंकरपाण्ड्यामहाभागाय, येन महता परिश्रमेण निष्ठया च गुरुगौरवेण जनताजनार्दनकरकमलं समुपस्थापितं ग्रन्थरत्नमेतत् । अहमाभारं बिभर्मि सकल-शास्त्रनिष्णातानां पण्डितप्रवराणां मुद्रणदोषनिराकरणचञ्चूनां जगद्गुरुवात्सल्यभाजनानां परमकुशलकर्मणां पं० प्रवर श्रीशिवरामशर्मणाम् पं० कृपासिन्धुशर्मणाम् च ।

अन्ततः साग्रहं निवेदयामि सर्वान् विद्वत्प्रवरान्, यत्—

**ग्रन्थरत्नमिदं मत्वा सीताभर्तुरनुग्रहम् ।**
**निराग्रहाः समर्चन्तु रामभद्रार्यभारतीम् ।।**

*इति निवेदयते*
*राघवीया*
**कु० गीता देवी**
प्रबन्धन्यासी, श्रीतुलसीपीठसेवान्यासस्य

# श्रीराघवाष्टकम्

निशल्या कौसल्या सुखसुरलतातान्तिहृतये ।
यशोवारां राशेरुदयमभिकाङ्क्षन्निव शशी ।
समञ्चन् भूभागं प्रथयितुमरागं पदरतिम् ।
तमालश्यामो मे मनसि शिशुरामो विजयते ।।१।।

क्वचित् क्रीडन् व्रीडाविनतविहगैर्वृन्दविरुदो ।
विराजन् राजीवैरिव परिवृतस्तिग्मकिरणः ।
रजोवृन्दं वृन्दाविमलदलमालामलमलम् ।
स्वलङ्कुर्वन् बालः स इह रघुचन्द्रो विजयते ।।२।।

क्वचिन् माद्यन् माद्यन् मधुनवमिलिन्दार्यचरणा- ।
म्बुजद्वन्द्वो द्वन्द्वापनयविधिवैदग्ध्यविदितः ।
समाकुञ्चत् केशैरिव शिशुघनैः संवृतमिव ।
विधुं वक्त्रं विभ्रन् नरपतितनूजो विजयते ।।३।।

क्वचित् खेलन् खेलन् मृदुमरुदमन्दाञ्चलचल- ।
च्छिरः पुष्पैः पुञ्जैर्विबुधललनानामभिचितः ।
चिदान्दो नन्दन् नवनलिननेत्रो मृदुहसन् ।
लसन् धूलीपुञ्जैर्जगति शिशुरेको विजयते ।।४।।

क्वचिन् मातुः क्रोडे चिकुरनिकरैरंजितमुखः ।
सुखासीनो मीनोपमदृशिलसत्कज्जलकलः ।
कलातीतो मन्दस्मितविजितराकापतिरुचिः ।
पिबन् स्तन्यं रामो जगति शिशुहंसो विजयते ।।५।।

क्वचिद् बालो लालालसितललिताम्भोजवदनो ।
वहन् वासः पीतं विशदनवनीतौदनकणान् ।

विलुण्ठन् भूभागे रजसि विरजा सम्भृत इव ।
तृषा ताम्यत्कामो भवभयविरामो विजयते ।।६।।

क्वचिद् राज्ञो हर्षं प्रगुणयितुकामः कलगिरा ।
निसिञ्चन् पीयूषं श्रवणपुटके सम्मतसताम् ।
विरिंगन् पणिभ्यां वनरुहपदाभ्यां कलदृशा ।
निरत्यन् नैराश्यं नवशशिकरास्यो विजयते ।।७।।

क्वचिन् नृत्यन् छायाछुपितभवभीतिर्भवभवो ।
दधानोऽलंकारं विगलितविकारं शिशुवरः ।
पुराराते: पूज्यः पुरुषतिलकः कन्दकमनः ।
अयोध्यासौभाग्यं गुणितमिहरामो विजयते ।।८।।

जयत्यसौ नीलघनावदातो ।
विभा विभातो जनपारिजातः ।
शोभा समुद्रो नरलोकचन्द्रः ।
श्रीरामचन्द्रो रघुचारुचन्द्रः ।।९।।

ईशावास्यसमारब्धाः बृहदारण्यकान्तिमाः ।
ऐकादशोपनिषदो विशदाः श्रुतिसम्मताः ।।१०।।

श्रीराघवकृपाभाष्यनाम्ना भक्तिसुगन्धिना ।
पुण्यपुष्पोत्करेणेड्याः मया भक्त्या प्रपूजिताः ।।११।।

क्वचित्क्वचित् पदच्छेदः क्वचिदन्वययोजना ।
क्वचिच्छास्त्रार्थपद्धत्या पदार्थाः विशदीकृताः ।।१२।।

खण्डनं परपक्षाणां विशिष्टाद्वैतमण्डनम् ।
चन्दनं वैष्णवसतां श्रीरामानन्दनन्दनम् ।।१३।।

श्रीराघवकृपाभाष्यं भूषितं सुरभाषया ।
भाषितं भव्यया भक्त्या वेदतात्पर्यभूषया ।।१४।।

प्रमाणानि पुराणानां स्मृतीनामागमस्य च।
तथा श्रीमानसस्यापि दर्शितानि स्वपुष्टये ।।१५।।

प्रत्यक्षमनुमानं च शाब्दञ्चेति यथास्थलम्।
प्रमाणत्रितायं ह्यत्र तत्वत्रयविनिर्णयम् ।।१६।।

विशिष्टाद्वैतसिद्धान्तदर्पणं श्रुतितर्पणम्।
अर्पणं रामभद्रस्य रामभद्रसमर्पणम् ।।१७।।

यदि स्युः त्रुटयः काश्चित्ताः ममैवाल्पमेधसः।
यदत्र किञ्चिद्वैशिष्ट्यं तच्छ्रीरामकृपाफलम् ।।१८।।

रुद्रसंख्योपनिषदां मया भक्त्या प्रभाषितम्।
श्रीराघवकृपाभाष्यं शीलयन्तु विमत्सराः ।।१९।।

इति मंगलमाशास्ते
श्रीवैष्णवविद्वत्प्रीतिवशंवदो राघवीयो जगद्गुरु रामानन्दाचार्यो स्वमिरामभद्राचार्यः
अधिचित्रकूटम्।

•

।। श्रीराघवो विजयतेतराम् ।।

# उपोद्घात

**केन विश्वमिदं सृष्टं कस्मै नम उदीर्यताम्।**
**इति जिज्ञासितं भक्तैर्ब्रह्मसीतापतिंश्रये ।।**

वैदिक मन्त्र भाग का यदि मलभंग के लिये कर्मकाण्ड में उपयोग है तो वहीं परमात्मा की अपरोक्ष अनुभूति एवं भारत-भारती की अक्षय्य संवित के लिए उपनिषद् का भी प्रत्येक आध्यात्मिक व्यक्ति के लिये चिर संस्मरणीय विनियोग भी है। उपनिषद हमारी भारतीय मनीषा का एक ऐसा अविरल और अनादि ज्ञान स्त्रोत है जिसका प्रवाह शाश्वत एवं पुरातन है। वेद के ज्ञानकाण्ड में तप:पूत महर्षियों द्वारा साक्षात्कार की हुई ये उपनिषदें आज भी लगभग एक सौ पचास की संख्या में उपलब्ध होती हैं जो सबकी सब पूर्वाचार्यों द्वारा स्वत: प्रमाण की कोटि में लाई गई हैं। उनमें केन उपनिषद् ब्रह्मजिज्ञासुओं के लिये बहुत ही उपयोगी निधि है। केन से प्रारम्भ होने के कारण इसे केन उपनिषद् कहते हैं। इसमें यक्ष की आख्यायिका तथा उमा इन्द्र-संवाद के माध्यम से सगुण साकार सविशेष परमात्मा का बहुत ही रोचक एवं मनोवैज्ञानिक वर्णन किया गया है।

केन उपनिषद् पर मैंने प्रस्थानत्रयी के भाष्य के क्रम में हिन्दी तथा संस्कृत भाषा में श्रीराघवकृपा भाष्य नामक दो व्याख्याओं का प्रणयन किया है। जिनमें श्रुतियों का अक्षरार्थ, अन्वयार्थ, भावार्थ तथा गंभीरतम पदार्थों को समझाने का यथासंभव एक लघुतम प्रत्यत्न मात्र किया गया है। मुझे विश्वास है कि श्रीराघव ऑफसेट प्रेस में मुद्रित तथा श्रीतुलसीपीठ सेवा न्यास आमोदवन श्रीचित्रकूट धाम से प्रकाशित केनोपनिषद् श्रीराघवकृपाभाष्य निश्चित ही अपने अध्येताओं के मन मन्दिर में प्रभु श्री सीताराम के श्रीचरण कमल की प्रेम सुरभि बिखेरने में कृतकार्य हो सकेगा।

।। इति मंगलमाशास्ते धर्मचक्रवर्ती चित्रकूटस्थ श्रीतुलसीपीठाधीश्वर जगद्‌गुरु रामानन्दाचार्यस्वामी रामभद्राचार्य महाराज ।।

।। श्रीराघवः शन्तनोतु ।।

।। श्रीराघवो विजयतेतराम् ।।

# आचार्यचरणानां बिरुदावली

नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागम् ।
पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ।।
रामानन्दाचार्यं मन्दाकिनीविमलसलिलासिक्तम् ।
तुलसीपीठाधीश्वरदेवं जगद्गुरुं वन्दे ।।

श्रीमद् सीतारामपादपद्मपरागमकरन्दमधुव्रतश्रीसम्प्रदायप्रवर्तकसकलशास्त्रार्थ-महार्णवमन्दरमतिश्रीमदाद्यजगद्गुरु श्रीरामानन्दाचार्यचरणारविन्दचञ्चरीकः समस्त-वैष्णवालंकारभूताः आर्षवाङ्मयनिगमागमपुराणेतिहाससन्निहितगम्भीरतत्वान्वेषण-तत्पराः पदवाक्यप्रमाणपारावारपारीणाः सांख्ययोगन्यायवैशेषिकपूर्वमीमांसावेदान्तनारद-शाण्डिल्यभक्तिसूत्रगीतावाल्मीकीयरामायणः भागवतादिसिद्धान्तबोधपुरःसरसमधि-कृताशेषतुलसीदाससाहित्य-सौहित्यस्वाध्यायप्रवचनव्याख्यानपरमप्रवीणाः सनातनधर्म-संरक्षणधुरीणाः चतुराश्रमचातुर्वर्ण्यमर्यादासंरक्षणविचक्षणाः अनाद्यविच्छिन्नसद्गुरु-परम्पराप्राप्तश्रीमद्सीतारामभक्तिभागीरथीविगाहनविमलीकृतमानसाः श्रीमद्रामचरित-मानसराजमरालाः सततं शिशुरूपराघवलालनतत्पराः समस्तप्राच्यप्रतीच्यविद्या-विनोदितविपश्चितः राष्ट्रभाषागीर्वाणगिरामहाकवयः विद्वन्मूर्धन्याः श्रीमद्रामप्रेम-साधनधनधन्याः शास्त्रार्थरसिकशिरोमणयः विशिष्टाद्वैतवादानुवर्तिनः परमहंस-परिव्राजकाचार्यत्रिदण्डी वर्याः श्रोत्रियब्रह्मनिष्ठाः प्रस्थानत्रयीभाष्यकाराः श्रीचित्रकूटस्थ-मन्दाकिनीविमलपुलिननिवासिनः श्रीतुलसीपीठाधीश्वराः श्रीमद्जगद्गुरु स्वामी रामानन्दाचार्याः अनन्तश्रीसमलंकृतश्रीश्रीरामभद्राचार्यमहाराजाः विजयतेतराम् ।

।। श्रीराघवः शन्तनोतु ।।

●

पदवाक्यप्रमाणपारावारीण, विद्यावारिधि, वाचस्पति परमहंस परिव्राजिकाचार्य, आशुकवि यतिवर्य प्रसथानत्रयी भाष्यकार धर्मचक्रवर्ती अनन्तश्री समलंकृत

श्रीतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य

पूज्यपाद

श्री श्री स्वामी रामभद्राचार्य जी महाराज

का

# संक्षिप्त जीवन वृत्त

## आविर्भाव

आपका अविर्भाव १४ जनवरी १९५० तदनुसार मकर संक्राति की परम पावन सान्ध्य बेला में वसिष्ठ गोत्रीय उच्च धार्मिक सरयूपारीण ब्राह्मण मिश्र वंश में उत्तर-प्रदेश के जौनपुर जनपद के पवित्र ग्राम शाडीखुर्द की पावन धरती पर हुआ। सर्वत्र आत्मदर्शन करने वाले हरिभक्त, या मानवता की सेवा करने वाले दानवीर, या अपनी मातृभूमि की रक्षा में प्राण बलिदान करने वाले शूर-वीर योद्धा, देशभक्त, को जन्म का सौभाग्य तो प्रभुकृपा से किसी भी माँ को मिल जाता है। परन्तु भक्त, दाता और निर्भीक तीनों गुणों की संपदा से युक्त बालक को जन्म देने का परम श्रेय अति विशिष्ठ भगवत् कृपा से किसी विरली माँ को ही प्राप्त होता है। अति सुन्दर एवं दिव्य बालस्वरूप आचार्य-चरण को जन्म देने का परम सौभाग्य धर्मशीला माता श्रीमती शची देवी और पिताश्री का गौरव पं० श्रीराजदेव मिश्रजी को प्राप्त हुआ।

आपने शैशव अवस्था में ही अपने रूप, लावण्य एवं मार्धुय से सभी परिवार एवं परिजनों को मोहित कर दिया। आप की बाल क्रीड़ाएँ अद्भुत थी। आपके श्वेतकमल समान सुन्दर मुख मण्डल पर बिखरी मधुर मुस्कान, हर देखने वाले को सौम्यता का प्रसाद बाँटती थी। आपका विस्तृत एवं तेजस्वी ललाट, आपके अपार शस्त्रीय ज्ञानी तथा त्रिकालदर्शी होने का पूर्व संकेत देता था। आपका प्रथम दर्शन मन को शीतलता प्रदान करता था। आपके कमल समान नयन उन्मुक्त हास्यपूर्ण मधुर चितवन चंचल बाल क्रीड़ाओं की चर्चा शीघ्र ही किसी महापुरुष के प्राकट्य की शुभ सूचना की भान्ति दूर-दूर तक फैल गई, और यह धारणा बन गई कि

यह बालक असाधारण है। 'होनहार विरवान के होत चीकने पात' की कहावत को आपने चरितार्थ किया।

## भगवत् इच्छा

अपने प्रिय भक्त को सांसारिक प्रपञ्चों से दूर रखने के लिए विधाता ने आचार्य वर के लिए कोई और ही रचना कर रखी थी। जन्म के दो महीने बाद ही नवजात शिशु की कोमल आँखों को रोहुआ रोग रूपी राहू ने तिरोहित कर दिया। आचार्य प्रवर के चर्मनेत्र बन्द हो गए। यह हृदय विदारक दुर्घटना प्रियजनों को अभिशाप लगी, परन्तु नवजात बालक के लिए यह वरदान सिद्ध हुई। अब तो इस नन्हे शिशु के मन-दर्पण पर परमात्मा के अतिरिक्त जगत् के किसी भी अन्य प्रपञ्च के प्रतिबिम्बित होने का कोई अवसर ही नहीं था। आपको दिव्य प्रज्ञा-चक्षु प्राप्त हो गए। आचार्य प्रवर ने भगवत् प्रदत्त अपनी इस अन्तर्मुखता का भरपूर उचित उपयोग किया। अब तो दिन-रात परमात्मा ही आपके चिन्तन, मनन और ध्यान का विषय बन गए।

## आरम्भिक शिक्षा

अन्तर्मुखता के परिणामस्वरूप आपमें दिव्य मेधाशक्ति और अद्भुत स्मृति का उदय हुआ, जिसके फलस्वरूप कठिन से कठिन श्लोक, कवित्त, छन्द, सवैया आदि आपको एक बार सुनकर सहज कण्ठस्थ हो जाते थे। मात्र पांच वर्ष की आयु में आचार्यश्री ने सम्पूर्ण श्रीमद्भगवद्गीता तथा मात्र आठ वर्ष की शैशव अवस्था में पूज्य पितामह श्रीयुत् सूर्यबली मिश्र जी के प्रयासों से गोस्वामी तुलसीदास जी रचित सम्पूर्ण रामचरितमानस क्रमबद्ध पंक्ति, संख्या सहित कण्ठस्थ कर ली थी। आपके पूज्य पितामह आपको खेत की मेड़ पर बिठाकर आपको एक-एक बार में श्रीमानस के पचास पचास दोहों की आवृत्ति करा देते थे। हे महामनीषी, आप उन सम्पूर्ण पचास दोहों को उसी प्रकार पंक्ति क्रम संख्या सहित कण्ठस्थ कर लेते थे। अब आप अधिकृत रूप से श्रीरामचरितमानससरोवर के राजहंस बन कर श्रीसीता-राम के नाम, रूप, गुण, लीला, धाम और ध्यान में तन्मय हो गए।

## उपनयन एवं दीक्षा

आपका पूर्वाश्रम का नाम 'गिरिधर-मिश्र' था। इसलिए गिरिधर जैसा साहस, भावुकता, क्रान्तिकारी स्वभाव, रसिकता एवं भविष्य निश्चय की

दृढ़ता तथा निःसर्ग सिद्ध काव्य प्रतिभा इनके स्वभाविक गुण बन गये। बचपन में ही बालक गिरिधर लाल ने छोटी-छोटी कविताएँ करनी प्रारम्भ कर दी थीं। २४ जून १९६१ को निर्जला एकादशी के दिन 'अष्टवर्ष ब्राह्माणमुपनयीत' इस श्रुति-वचन के अनुसार आचार्यश्री का वैदिक परम्परापूर्वक उपनयन संस्कार सम्पन्न किया गया तथा उसी दिन गायत्री दीक्षा के साथ ही तत्कालीन मूर्धन्य विद्वान् सकलशास्त्र-मर्मज्ञ पं० श्रीईश्वरदास जी महाराज जो अवध-जानकीघाट के प्रवर्तक श्री श्री १०८ श्रीरामवल्लभाशरणजी महाराज के परम कृपापात्र थे, इन्हें राम मन्त्र की दीक्षा भी दे दी।

## उच्च अध्ययन

आपमें श्रीरामचरितमानस एवं गीताजी के कण्ठस्थीकरण के पश्चात् संस्कृत में उच्च अध्ययन की तीव्र लालसा जागृत हुई और स्थानीय आदर्श श्री गौरीशंकर संस्कृत महाविद्यालय में पाँच वर्ष पर्यन्त पाणिनीय व्याकरण की शिक्षा सम्पन्न करके आप विशेष अध्ययन हेतु वाराणसी आ गये। सम्पूर्णानन्द संस्कृत विश्वविद्यालय की १९७३ शास्त्री परीक्षा में विश्वविद्यालय में सर्वप्रथम स्थान प्राप्त कर एक स्वर्ण पदक प्राप्त किया एवं १९७६ की आचार्य की परीक्षा में समस्त विश्वविद्यालय में छात्रों में सर्वप्रथम स्थान प्राप्त कर पाँच स्वर्ण पदक तथा एक रजत पदक प्राप्त किया। वाक्पटुता एवं शास्त्रीय प्रतिभा के धनी होने के कारण आचार्यश्री ने अखिल भारतीय संस्कृत अधिवेशन में सांख्य, न्याय, व्याकरण, श्लोकान्त्याक्षरी तथा समस्यापूर्ति में पाँच पुरस्कार प्राप्त किये, एवं उत्तर प्रदेश को १९७४ की 'चलवैजयन्ती' प्रथम पुरस्कार दिलवाया। १९७५ में अखिल भारतीय संस्कृत वाद-विवाद प्रतियोगिता में प्रथम स्थान प्राप्त कर तत्कालीन राज्यपाल डॉ० एम० चेन्ना रेड्डी से कुलाधिपति 'स्वर्ण पदक' प्राप्त किया। **इसी प्रकार आचार्यचरणों ने शास्त्रार्थों एवं भिन्न-भिन्न शैक्षणिक प्रतियोगिताओं में अनेक शील्ड, कप एवं महत्वपूर्ण शैक्षणिक पुरस्कार प्राप्त किये।** १९७६ वाराणसी साधुबेला संस्कृत महाविद्यालय में समायोजित शास्त्रार्थ आचार्यचरण प्रतिभा का एक रोमांचक परीक्षण सिद्ध हुआ। इसमें आचार्य अन्तिम वर्ष के छात्र, प्रत्युत्पन्न मूर्ति, शास्त्रार्थ-कुशल, श्री गिरिधर मिश्र ने 'अधातु परिष्कार' पर पचास विद्यार्थियों एवं अध्यापकों को अपनी ऋतम्भरा प्रज्ञा एवं शास्त्रीय युक्तियों से अभिभूत करके निरुत्तर करते हुए सिंहगर्जनपूर्वक तत्कालीन विद्वान् मूर्धन्यों को परास्त किया था। पूज्य आचार्यश्री ने सं०वि०वि० के व्याकरण विभागाध्यक्ष

पं० श्री रामप्रसाद त्रिपाठी जी से भाष्यान्त व्याकरण की गहनतम शिक्षा प्राप्त की एवं उन्हीं की सन्निद्धि में बैठकर न्याय, वेदान्त, सांख्य आदि शास्त्रों में भी प्रतिभा ज्ञान प्राप्त कर लिया एवं 'अध्यात्मरामायणे अपणिनीयप्रयोगाणां विमर्श:' विषय पर अनुसन्धान करके १९८१ में विद्यावारीधि (Ph.D) की उपाधि प्राप्त की। **अनन्तर ''अष्टाध्याय्याः प्रतिसूत्रं शाब्दबोध समीक्षा'' इस विषय पर दो हजार पृष्ठों का दिव्य शोध प्रबन्ध प्रस्तुत करके आचार्य चरणों ने शैक्षणिक जगत् की सर्वोत्कृष्ट अलंकरण उपाधि वाचस्पति'' (Dlit) प्राप्त की।**

## विरक्त दीक्षा

मानस की माधुरी एवं भागवतादि सद्ग्रन्थों के अनुशीलन ने आचार्य-चरण को पूर्व से ही श्री सीतारामचरणानुरागी बना ही दिया था। अब १९ नवम्बर १९८३ की कार्तिक पूर्णिमा के परम-पावन दिवस को श्रीरामानन्द सम्प्रदाय में विरक्त दीक्षा लेकर आचार्यश्री ने एक और स्वर्ण सौरभ-योग उपस्थित कर दिया। पूर्वाश्रम के डॉ० गिरिधर मिश्र अब श्रीरामभद्रदास नाम से समलंकृत हो गये।

## जगद्गुरु उपाधि

आपने १९८७ में श्रीचित्रकूट धाम में श्रीतुलसीपीठ की स्थापना की। उसी समय वहाँ के सभी सन्त-महान्तों के द्वारा आपको श्रीतुलसीपीठाधीश्वर पद पर प्रतिष्ठित किया और ज्येष्ठ शुक्ल गंगा दशहरा के परम-पावन दिन वि० सम्वत् २०४५ तदनुसार २४ जून १९८८ को वाराणसी में आचार्यश्री का काशी विद्वत् परिषद् एवं अन्य सन्तमहान्त विद्वानों द्वारा चित्रकूट श्रीतुलसीपीठ के जगद्गुरु रामानन्दाचार्य पर पर विधिवत अभिषेक किया गया एवं ३ फरवरी १९८९ को प्रयाग महाकुम्भ पर्व पर समागत सभी श्री रामानन्द सम्प्रदाय के तीनों अखाड़ों के श्रीमहन्तों चतु:सम्प्रदाय एवं सभी खालसों तथा सन्तों द्वारा चित्रकूट सर्वाम्नाय श्रीतुलसीपीठाधीश्वर जगद्गुरु श्रीरामानन्दाचार्य श्रीरामभद्राचार्य महाराज को सर्वसम्मति से समर्थनपूर्वक अभिनन्दित किया।

## विलक्षणता

आपके व्यक्तित्व में अद्भुत विलक्षणता है। जिनमें कुछ उल्लेखनीय हैं कोई भी विषय आपको एक ही बार सुनकर कण्ठस्थ हो जाता है और वह कभी विस्मृत नहीं होता। इसी विशेषता के परिणामस्वरूप जगद्गुरु श्रीरामानन्दाचार्य

जी ने समस्त तुलसी साहित्य अर्थात् तुलसीदास जी के बारहों ग्रन्थ, सम्पूर्ण रामचरितमानस, द्वादश उपनिषद्, ब्रह्मसूत्र, नारद-भक्तिसूत्र, भागवद्गीता, शाण्डिल्य सूत्र, बाल्मीकीयरामायण व समस्त आर्य ग्रन्थों के सभी उपयोगी प्रमुख अंश हस्तामलकवत् कण्ठस्थ कर लिये। आचार्यश्री हिन्दी एवं संस्कृत के आशुकवि होने के कारण समर्थ रचनाएँ भी करते हैं। वसिष्ठ गोत्र में जन्म लेने के कारण आचार्यवर्य श्रीराघवेन्द्र की वात्सल्य भाव से उपासना करते हैं। आज भी उनकी सेवा में शिशु रूप में श्री राघव अपने समस्त परिकर खिलौने के साथ विराजमान रहते हैं। आचार्यवर्य की मौलिक विशेषता यह है कि इतने बड़े पद को अलंकृत करते हुए भी आपका स्वभाव निरन्तर निरहंकार, सरल तथा मधुर है। विनय, करुणा, श्रीराम-प्रेम, सच्चरित्रता आदि अलौकिक गुण उनके सन्तत्त्व को ख्यापित करते हैं। कोई भी व्यक्ति एकबार ही उनके पास आकर उनका अपना बन जाता है। हे भारतीय संस्कृति के रक्षक ! **आप अपनी विलक्षणकथा शैली से श्रोताओं को विभोर कर देते हैं।** माँ सरस्वती की आप पर असीम कृपा है। आप वेद-वेदान्त, उपनिषद्, दर्शन, काव्यशास्त्र व अन्य सभी धार्मिक ग्रन्थों पर जितना अधिकारपूर्ण प्रवचन करते हैं उतना ही दिव्य प्रवचन भगवान् श्रीकृष्ण की वाङ्मय मूर्ति महापुराण **श्रीमद्भागवत पर भी करते हैं।** आप सरलता एवं त्याग की दिव्य मूर्ति हैं। राष्ट्र के प्रति आपकी सत्यनिष्ठ स्पष्टवादिता एवं विचारों में निर्भीकता जन-जन के लिए प्रेरणादायक है। आपके दिव्य प्रवचनों में ज्ञान, भक्ति और वैराग्य की त्रिवेणी तो प्रवाहित होती है, साथ ही राष्ट्र का सागर भी उमड़ता है। जिसे आप अपनी सहज परन्तु सशक्त अभिव्यक्ति की गागर में भर कर अपने श्रद्धालु श्रोताओं को अवगाहन कराते रहते हैं।

आपका सामीप्य प्राप्त हो जाने के बाद जीव कृत्य-कृत्य हो जाता है। धन्य हैं वे माता-पिता जिन्होंने ऐसे 'पुत्ररत्न' को जन्म दिया। धन्य हैं वे सद्गुरु जिन्होंने ऐसा भागवत् रत्नाकर समाज की दिया। हे श्रेष्ठ सन्त शिरोमणि ! हम सब भक्तगण आपके व्यक्तित्व एवं कृतित्व पर गौरवान्वित हैं।

## साहित्य सृजन

आपने अपनी बहुमुखी प्रतिभा से हिन्दी एवं संस्कृत के अनेक आयामों को महत्त्वपूर्ण साहित्यिक उपादान भेंट किये। काव्य, लेख, निबन्ध, प्रवचन संग्रह एवं दर्शन क्षेत्रों में आचार्यश्री की मौलिक रचनाएँ महत्त्वपूर्ण स्थान रखती हैं।

इस प्रकार आचार्यश्री अपने व्यक्तित्व, कृतित्व से श्रीराम-प्रेम एवं सनातन धर्म के चतुर्दिक प्रचार व प्रसार के द्वारा सहस्राधिक दिग्भ्रान्त नर-नारियों को सनातन धर्मपीयूष से जीवनदान करते हुए अपनी यश:सुरभि से भारतीय इतिहास वाटिका को सौरभान्वित कर रहे हैं। तब कहना पड़ता है कि—

**शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे।**
**साधवो नहि सर्वत्र, चन्दनं न वने वने।।**

❀ ❀ ❀

**संत सरल चित जगतहित, जानि सुभाउ सनेहु।**
**बाल विनय सुनि करि कृपा, रामचरन रति देहु।।**

## धर्माचार्य परम्परा :–

**भाष्यकार !**

प्राचीन काल में धर्माचार्यों की यह परम्परा रही है कि वही व्यक्ति किसी भी सम्प्रदाय के आचार्यपद पर प्रतिष्ठित किया जाता था, जो उपनिषद्, गीता तथा ब्रह्मसूत्र पर अपने सम्प्रदाय के सिद्धान्तानुसार वैदुष्यपूर्ण वैदिक भाष्य प्रस्तुत करता था। जिसे हम 'प्रस्थानत्रयी' भाष्य कहते हैं, जैसे शंकराचार्य आदि। आचार्यप्रवर ने इसी परम्परा का पालन करते हुए सर्वप्रथम नारदभक्तिसूत्र पर "श्रीराघवकृपाभाष्यम्" नामक भाष्य ग्रन्थ की रचना की। उसका लोकार्पण १७ मार्च १९९२ को तत्कालीन उप राष्ट्रपति डॉ० शंकरदयाल शर्मा द्वारा सम्पन्न हुआ।

पूज्य आचार्यचरण के द्वारा रचित **'अरुन्धती महाकाव्य' का समर्पण** समारोह दिनांक ७ जुलाई ९४ को भारत के राष्ट्रपति महामहिम डॉ० शंकरदयाल शर्मा जी के कर-कमलों द्वारा सम्पन्न हुआ।

इसी प्रकार आचार्यचरणों ने एकादश उपनिषद्, ब्रह्मसूत्र तथा श्रीमद्भगवद्गीता पर रामानन्दीय श्रीवैष्णव सिद्धान्तानुसार भाष्य लेखन सम्पन्न करके विशिष्टाद्वैत अपनी श्रुतिसम्मत जगद्गुरुत्व को प्रमाणित करके इस शताब्दी का कीर्तिमान स्थापित किया है।

आप विदेशों में भी भारतीय संस्कृति का विश्वविश्रुत ध्वज फहराते हुए सजगता एवं जागरूकता से भारतीयधर्माचार्यों का कुशल प्रतिनिधित्व करते हैं।

## आचार्यश्री के प्रकाशित ग्रन्थ

१. मुकुन्दस्मरणम् (संस्कृत स्तोत्र काव्य) भाग–१–२
२. भरत महिमा
३. मानस में तापस प्रसंग
४. परम बड़भागी जटायु
५. काका बिदुर (हिन्दी खण्ड काव्य)
६. माँ शबरी (हिन्दी खण्ड काव्य)
७. जानकी-कृपा कटाक्ष (संस्कृत स्तोत्र काव्य)
८. सुग्रीव की कुचाल और विभीषण की करतूत
९. अरुन्धती (हिन्दी महाकाव्य)
१०. राघव गीत-गुञ्जन (गीत काव्य)
११. भक्ति-गीता सुधा (गीत काव्य)
१२. श्री गीता तात्पर्य (दर्शन ग्रन्थ)
१३. तुलसी साहित्य में कृष्ण-कथा (समीक्षात्मक ग्रन्थ)
१४. सनातन धर्म विग्रह-स्वरूपा गौ माता
१५. मानस में सुमित्रा
१६. भक्ति गीत सुधा (गीत काव्य)
१७. श्रीनारदभक्तिसूत्रेषु राघवकृपाभाष्यम् (हिन्दी अनुवाद सहित)
१८. श्री हनुमान चालीसा (महावीरी व्याख्या)
१९. गंगामहिम्नस्तोत्रम् (संस्कृत)
२०. आजादचन्द्रशेखरचरितम् (खण्डकाव्य) संस्कृत
२१. प्रभु करि कृपा पाँवरि दीन्ही
२२. राघवाभ्युदयम् (संस्कृत नाटक)

## आचार्यश्री के शीघ्र प्रकाशित होने वाले ग्रन्थ

१. हनुमत्कौतुक (हिन्दी खण्ड काव्य)
२. संस्कृत शतकावली (क) आर्याशतकम् (ख) सीताशतकम् (ग) राघवेन्द्रशतकम् (घ) मन्मथारिशतकम् (ङ) चण्डिशतकम् (च) गणपतिशतकम् (छ) चित्रकूटशतकम् (ज) राघवचरणचिह्नशतकम्
३. गंगामहिम्नस्तोत्रम् (संस्कृत)
४. संस्कृत गीत कुसुमाञ्जलि
५. संस्कृत प्रार्थनाञ्जलि
६. कवित्त भाण्डागारम् (हिन्दी)

●

।। श्रीमद्राघवो विजयतेतराम् ।।

।। श्रीमते रामानन्दाचार्याय नमः ।।

# केनोपनिषदि

# श्रीराघवकृपाभाष्यम्

पदवाक्यप्रमाणपारावारीण-कवितार्किकचूडामणि-वाचस्पति-
जगद्गुरुरामानन्दाचार्य-स्वामि-रामभद्राचार्य-प्रणीतं,
श्रीमज्जगद्गुरु-रामानन्दाचार्यसम्प्रदायानुसारि-
विशिष्टाद्वैतसिद्धान्तप्रतिपादकश्रीराघवकृपाभाष्यम् ।।

।। श्रीमद्राघवो विजयतेतराम् ।।
।। श्रीरामानन्दाचार्याय नमः ।।

# केनोपनिषदि

# श्रीराघवकृपाभाष्यम्

## मंगलाचरणम्

सुरनरमुनिवरमृग्यं कौसल्या किमपि फलं फलति ।
तल्लालयति सुमित्रा प्रकायमास्वादयति सीता ।।१।।

श्रीभानुमद् दुहितृ कल्पलताप्रसूति–
राकूतिधर्मगुणमञ्जुलपुष्पशाली ।
सीतालताविलसितो जनताभिरामो,
रामाभिधो जयति जैत्रतरुस्तमालः ।।२।।

तं तमालशुभगं गम्भीरया बालकोचितगिरा सुधामुचा
रञ्जयन्तमनिशं नृपाङ्गणं राघवं मनसि शीलये शिशुम् ।।३।।

केनेदं धनुरानतं बलवता भग्नञ्च केनेश तु
केनेदं शकलीकृतं कृतिमता क्षिप्तञ्च केनावनौ
एवं रोषकरालनेत्रभृकुटिज्वालावलीढं नृपम्
पृच्छन्तं परिसान्त्वयन् भृगुवरं श्रीराघवस्त्रायताम् ।।४।।

यत्पादाम्बुरुहध्यानविध्वस्ताशेषकल्मषः ।
कृतकृत्योऽस्मि तं वन्दे रामानन्दं जगद्गुरुम् ।।५।।

नत्वा श्रीतुलसीदासं रामानन्दाश्रितान् सतः ।
केनोपनिषदो भाष्यं कुर्वे सीतापतेर्मुदे ।।६।।

अथ श्रीमदाद्यजगद्गुरुरामानन्दाचार्यचरणकुशेशयपरागानुरागविमलीकृताशयेन श्रीचित्रकूटबिहारिश्रीराघवललितलीलाकीलाललालितचेतसा तुलसीपीठाधिपतिना जगद्गुरूश्रीरामानन्दाचार्यपदमुद्वहता स्वामिरामभद्राचार्यकृतिना मया श्रीसीतारामपरितोषाय श्रीरामानन्दसम्प्रदायपरम्पराप्राप्तविशिष्टाद्वैतवादमनुसृत्य नातिदीर्घलघुकायं निरस्तसमस्तप्रतिपक्षव्यलीकवादप्रत्यवायं केनोपनिषदि श्रीराघवकृपाभिधं भाष्यं भाषितुमुपक्रमे ।

केनोपनिषदियं ब्रह्ममीमांसाप्रत्तिपादिकोपनिषत्सु मुख्यतमं स्थानमादत्ते । एषा नाम सामवेदीयतलवकारब्राह्मणान्तगर्तनवमाध्याय: खण्डत्रयात्मक: । तत्त त्सामवेदीय-तलवकारब्राह्मणे पूर्वेष्वष्टस्वध्यायेषु कर्मोपासनयो: साधनसामग्रीवर्णनम् । तस्य चरमेऽध्याये ब्रह्ममीमांसावर्णनं तस्मादियमुपनिषद् कथ्यते ।

वेदस्य ज्ञानकाण्डश्रुतीनां हि वैश्वजनीनी उपनिषत् संज्ञा । केनशब्देनास्या: प्रथममन्त्रस्य प्रारम्भादियमपि केनोपनिषदिति प्रसिद्धिमयासीत् । अस्याश्चतुर्षु शकलेषु ब्रह्ममीमांसा साटोपमुपबृंहिता । तत्र प्रथममुपनिषद्पारम्परीसमनुरोधत: शान्तिपाठव्याख्यानम् ।

## शान्तिपाठः

**ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्, अनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु, ते मयि सन्तु ।।**

**ॐ शान्तिः शान्तिः शान्तिः ।**

ॐ मम अङ्गानि वाक् प्राण: चक्षु: श्रोत्रम् च सर्वाणि इन्द्रियाणि अथो बलम् आप्यायन्तु, सर्वम् औपनिषदम् ब्रह्म, अहम् मा निराकुर्याम्, ब्रह्म मा मा निराकरोत्, अनिराकरणम् अस्तु मे अनिराकरणम् अस्तु, उपनिषत्सु ये धर्मा: ते तदात्मनि निरते मयि सन्तु, ते मयि सन्तु ॐ शान्ति: शान्ति: शान्ति: इत्यन्वय: ।

ॐ इति सम्बोधनात्मकं भगन्नाम, तथा च अवति तर्पयति भक्तानभीष्टकामवरै: य: स: ॐ तत्साम्बुद्धौ हे ॐ ! हे भक्तजनतर्पक ! मम साधकस्य त्वत्पादपद्मं प्रपद्यमानस्य, अङ्गानि चरणजानूरूकटिवक्ष:पाणिग्रीवावदनशिर:प्रभृतीनि । वाक् वाणी तदधिष्ठातृदेवता च, प्राण: प्राणिति येन तथाभूत: प्राणधारकशक्त्यवच्छिन्नदैवतविशेष:, चक्षु: चष्टे विलोकयति येन तथाभूतम् । चक्षिङ्व्यक्तायां वाचि इत्यस्मात् औणादिक

उण् प्रत्ययः धातूनामनेकार्थकत्वात् एतस्य दर्शनार्थत्वाङ्गीकारे न दोषः । श्रोत्रम्, श्रवणम्, च तथा सर्वाणि निखिलानि, इन्द्रियाणि सकलेन्द्रियदैवतानि इति भावः । ननु सर्वाणीन्द्रियाणीत्युक्तावेव वाक्चक्षुःश्रोत्राणामिन्द्रियतया गतार्थत्वात् पुनस्तदुपादानं पृथकत्वेन किमभिप्रायकमिति चेत्, ब्राह्मणवशिष्ठन्यायेन इतरेन्द्रियापेक्षया तेषां सविशेषमहत्वद्योतनार्थम् । अथो, आनन्तर्यार्थमव्ययमेतत्, बलम् प्राणशक्तिः साचात्र कामरागविवर्जिता आत्मबलापरपर्याया गृह्यते **बलं बलवतां चाहं कामरागविवर्जितम्** (गीता ७-११) इति स्मृतेः । एवमेव अङ्गानि इन्द्रियप्राणबलाधिष्ठातृदैवतानि अधिष्ठानानि च तेषाम्, आप्यायन्तु पुष्टानि सन्तु । ननु ज्ञानकाण्डीयविचारणायां पदे पदे शरीरस्य तदङ्गानां च नश्वरता ख्यापिता, तत्र ब्रह्मविचारे आत्मानात्मविमर्शे व्यवहारस्य मिथ्यात्व-निश्चये तन्निबन्धनस्य शरीरस्यापि तथात्वेन प्रत्यये । कथं तर्हि ब्रह्मविचारणासर्वस्वोपनिषदि शरीरतदङ्गसम्पोषणाभिलाषनिबन्धनोऽयं शान्तिपाठः ? इति चेदुच्यते-ममता परित्यागाय तत्र शरीरक्षणभङ्गुरता निश्चयः समपेक्षते, परं समेषां ज्ञानवैराग्यभक्तिप्रमुखानां भगवत्प्राप्तिसाधनानां मूलद्वारतया शरीरस्य तदङ्गानां च सम्पोषणमपि नितरामपेक्षते नहि पुनरन्तरेण तनुं भगवत्प्राप्तिसाधनानि शक्यन्ते समनुष्ठातुम् । यथा यानमन्तरा नहि कोऽपि प्रभवति सहस्राधिकयोजनपर्यन्तां सुदीर्घयात्रां विधातुम् । तस्यां हि यानस्य प्रमुखभूमिका निभालकत्वात् । तस्मात् तिष्ठतु नाम निरस्तममत्वज्ञानपरायणानां कृते देहानित्यत्वधिष्णा, परञ्च परमेश्वरावाप्तिसाधनबेलायां शरीरारोग्यं सुतरामपेक्षितम् अतः प्राहुरायुर्वेदविशारदाः **धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्** वाग्भट्टोऽपि उभयविधस्वास्थ्यलक्षणं निगदन् प्राह—

**समदोषः समाग्निश्च समधातुमलक्रियः ।**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधियते ।।**

अत्र पूर्वार्धेन बहिरङ्गस्वास्थ्यं संल्लक्ष्य चरमार्धेन तदन्तरङ्गलक्षण मलक्षीति व्याचक्षते विनश्चितः । अथ प्रकृतमनुसरामः सर्वम्, सर्वत्रव्याप्तम् यद्वा सर्वमिति सप्तम्यन्तप्रतिरूपकं तथा हि–सर्वस्मिन् इति विग्रहे ङि विभक्तेः **सुपां सुलुक्** पा.अ. ७-१-३९ इत्यनेन सु आदेशे तस्यैव "अतोऽम्" इत्यनेन अमि पूर्वरूपे सर्वम्, उपनिषत्सु प्रसिद्धम् औपनिषदं **शेषे** इत्यनेन अण् प्रत्ययः, तथा च सर्वस्मिन् चराचरे उपनिषत् प्रसिद्धं ब्रह्मवर्धनशीलं परमात्मतत्वं विराजते इति वाक्यार्थः । अहम्, बह्मातिरिक्तसत्ताकसाधकः, ब्रह्म उपनिषत्प्रसिद्धं परमात्मतत्वं मा निराकुर्यां तत्पदाम्भोजविमुखो भूत्वा मा तिरस्कारविषयं कुर्याम् इति भावः, ब्रह्म स्वभक्तवर्धकं परमेश्वरतत्वं मा माम् स्वशरणागतं **त्वामोद्वितीयायाः** इत्यनेन मां शब्दस्य मादेशः,

मा नहि निराकरोत् मा तिरस्कारविषयं करोतु **व्यत्ययो बहुलम्** पा.अ.३-१-८५ इत्यनेन लोडर्थे लङ्लकारः । अनिराकरणम्, मम परमात्मनश्च अन्योन्यश्च अनिराकरणं निराकरणाभावः अस्तु, भवतु, उभावप्यन्योऽन्यं सम्मानयन्तौ मा तिरस्कारविषयं कुरुतां इति हार्दम् । तदेव द्रढयन्नाह—मे मम साधकस्य अनिराकरणम्, निराकरणभिन्नं निजचरणारविन्दसन्निधौ स्वीकरणम् इति भावः, अस्तु भूयात् । उपनिषत्सु, साक्षात्भगवत्प्रतिपादनपरासु श्रुतिषु ये, यावन्तः धर्माः भगवच्चरणारविन्दप्राप्त्युपायभूताः ते धर्माः, प्रपत्तिलक्षणाः तदात्मनि स चासौ आत्मा इति तदात्मा श्रुतिप्रसिद्धपरमात्मरूपः तस्मिन् तदात्मनि, रते निसर्गतः कृतानुरागे मयि, परमात्मप्रपन्ने साधके सन्तु विलसन्तु, ते मयि सन्तु तमेवार्थं प्रढयितुं भूयोऽनुवादः । ॐ, हे जनतापहारिन् ! शान्तिः शान्तिः शान्तिः त्वत्कृपाकादम्बिन्या त्वां शरणमुपेयुषां तापत्रयोपशमनं भूयात् इति प्रार्थयमानः केनोपनिषत्प्रवचनमुपक्रमते ॥श्रीः॥

## ।। प्रथमखण्डः ।।

गुरुशिष्यसम्वादपरम्परया ब्रह्ममीमांसा प्रवर्तते, तया च तत्वबोधे जिज्ञासवोऽल्पीयसायासेन पारे शास्त्रसागरं व्रजन्तीति गुरुशिष्यसम्वादमवतारयति—

**ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ।।१।।**

केन इषितम् प्रेषितम् मनः पतति, केन युक्तः प्रथमः प्राणः प्रैति, केन इषिताम् इमाम् वाचम् वदन्ति, कः देवः चक्षुः श्रोत्रम् उ युनक्ति इत्यन्वयः ।

**आचार्यवान् पुरुषो वेद** तद् विज्ञानार्थं स गुरु मेवाभिगच्छेत् समित्पाणिः **श्रोत्रियं ब्रह्मनिष्ठम्** इत्यादि श्रुत्युरोधेन ब्रह्मविद्याम् आचार्यायत्तां मत्वा तृषार्तकरीव सरोवरं पाणौ समिधौ गृहीत्वा ब्रह्मनिष्ठमाचार्यमुपसृत्य प्रणिपत्य जिज्ञासुशिष्यः प्राञ्जलिः प्रणतः पृच्छति केन इत्यादि, हे देव ! केन किन्नामकेन, इषित्रा इषितम्, लब्धानुशासनं प्रेषितम् स्वसन्निधिं प्रापितं, मनः सङ्कल्पात्मतकम् अन्तःकरणं पतति, विषयेषु इति शेषः । यथा पतङ्गः दीपप्रभां दृष्ट्वा विचारमन्तरेणैव बुभुक्षया तामाश्रयते तथैव मनोऽप्येतत् सहसैव परिणाममनपेक्ष्य विषयान् भोग्यतया समालम्बत इति हार्दम् । एवमेव केन किमभिधेन कर्माध्यक्षेण युक्तः नियुक्तः प्रथमः सर्वेन्द्रियापेक्षया श्रेष्ठः प्राणः जीवनधारक श्वासविशेषः प्रैति पञ्चधाविभक्तः शरीरे सञ्चरति यद्वा प्रथमः दशेन्द्रिय-चतुरन्तःकरणपञ्चतन्मात्रा पञ्चमहाभूतपञ्चवायुनामपि प्राथम्येन नियामकः प्राणः प्राणानामिति शेषः, प्राणन्ति

मुखनासिकादिद्वारेण पञ्चवायवो येन तथाविधः प्राणो जीवात्मा प्रैति केन दत्तगतिः, कः प्रतिशरीरं निष्प्रत्यूहं गतागतं करोतीति भावः । एवमेव केन किं संज्ञेन प्रेरकेण, ईषिताम् लब्धप्रेरणां वाचं सरस्वतीं वदन्ति व्याहरन्ति, चेतनामन्तरेण जाड्यतया व्यवहारासम्भवात् । तथा कः किमभिधानः देवः, दैवीं शक्तिं श्रयमाणः चक्षुः श्रोत्रम्, नेत्रं श्रवणेन्द्रियमुपलक्षणतया सकलानि हृषीकाणि, उ निश्चयेन, युनक्ति स्व स्व विषयेषु नियुक्तानि करोति इति भावः । जडीभूतस्य मनसः को नाम प्रेषयिता प्रेरको वा, प्रेषणं विना तस्य विषयभोगासामर्थ्यात् एवं सर्वत्रसञ्चरणशीलस्य प्राणस्य चेतनमन्तरेण तत्तच्छरीरेषु केन नियोजनं सम्भवम् । इत्थमेव कर्मेन्द्रियतया सर्वथा जडीकृतायां वाचि लोकार्थविषयकबोधजनकताभावात् केन समर्पितार्थां तां वदन्तो जनाः व्यवहरन्ति । एवमेव सकलेन्द्रियाणि कुतश्चेतनां लब्ध्वा स्वकार्याणि कर्तुं पारयन्तीति चतुर्भिः प्रश्नैः चतुष्पादविभूतिकं श्रीरामाभिधानं ब्रह्म जिज्ञासते स्म सच्छिश्यः ।।श्रीः।।

एवं जिज्ञासमानं सकलसाधनसम्पन्नं शान्तं दान्तं विनीतमुपनीतं सच्छिश्यं प्रति सद्गुरुः तदेव परमतत्वं विशिष्टाद्वैतं यत्किञ्चित्तया व्याख्यातुं समीहमानः पूर्वं प्रागुक्तानां बहिरन्तःकरणप्राणानां चेतनास्रोतस्त्वेन तं परमात्मानं समभिधत्ते श्रोत्रस्य श्रोत्रमित्यादिना ।

**श्रोतस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचँ स उ प्राणस्य प्राणः ।**
**चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।।२।।**

यत् मनसः मनः (यः) प्राणस्य प्राणः (यत्) श्रोत्रस्य श्रोत्रम् (यत्) वाचः वाचम् (यत्) चक्षुसः चक्षुः सः ह धीराः अतिमुच्य अस्मात् लोकात् प्रेत्य अमृताः भवन्ति, इत्यन्वयः ।

अस्मिन् मन्त्रे वाक्यद्वयं प्रथमं पूर्वमन्त्रकृत प्रश्नचतुष्टयोत्तररूपं, द्वितीयं तल्लक्ष्यप्राप्तिप्रयत्नप्रवर्तकम् । जिज्ञासुं प्रपन्नं शिष्यं प्रति प्राहाचार्यः– वत्स ! तव चतस्रोऽपि जिज्ञासाः समीचीनाः सोपपत्तिकाश्च । भूतार्थमेवैतत् यदन्तःकरणं बहिःकरणं प्राणाः इदं सर्वमपि क्षेत्रसंघातं स्वभावतो जडम् । एतेषु कतममपि स्वाधिष्ठानचैतन्यमन्तरेण मनाक् स्पन्दितुमपि न पारयति । यथा सङ्कलितसकलोपकरणं यानं चालकं विना तिलमात्रमपि चलितुं न प्रभवति । यथैवानुपपत्या चालकमपश्यन्नपि चलता यानेन तं निश्चिनोति तथैव जडमपि मनो व्यवहारे गृहीतसङ्कल्पं निरीक्ष्य, जडमपि प्राणं सर्वत्र निरवरोधं प्रयान्तं समीक्ष्य, अर्थहीनाभिवाचं परिकलितसर्वार्थां व्याहरन्तुं विभाव्य, निर्ज्योतिरपि चक्षुः जगज्ज्योतिसाधनं समवलोक्य, अशब्दमपि श्रोत्रं लब्धगगनगुणं श्रवणकरणं विचार्य, किमपि विशिष्टाद्वैततत्वं परब्रह्म मनसोऽपि मननसाधनं प्रेषयितारं

प्राणस्यापि प्रयोक्तारं वाचेऽपि समभिप्रेतार्थानां समर्पयितारं चक्षुश्श्रोत्रयोरपि स्वस्वविषयग्रहणे नियोक्तारम् औपनिषदं ब्रह्म विनिश्चिनु इति हि मन्त्रस्य प्रथमवाक्यार्थः । तथा हि यत् सर्वोपनिषद् वेद्यं, मनसः संकल्पप्रधानान्तःकरणस्य, मनः मननसाधनरूपमादिकारणम् अभिन्ननिमित्तोपादानकारणमितिभावः, यः सर्वाभौमसत्ताकः प्राणस्य, पञ्चधाविभक्त-शरीरसञ्चारिवायुविशेषस्य प्राणः, प्राणयिता जीवात्माख्यः यत् श्रुतिप्रसिद्धं श्रोत्रस्य, श्रवणन्द्रियस्य श्रोत्रम्, कारणभूतं तस्मादेवचेतनां प्राप्य श्रवणेन्द्रियं श्रवणायोपकल्पत इति भावः । यत् चराचरं व्याप्तं, वाचः, वाण्याः वाचम्, कारणभूतं, यद्यपि वाक्शब्दः नित्यस्त्रीलिङ्गः प्रथमैकवचनः हलन्तश्च तथापि वाचमिति नपुंसकलिङ्गे प्रथमैकवचनाजन्तस्यानुरोधात् आर्षत्वात् समाधेयः, यद्वा **षष्ठीयुक्तस्छन्दसि** वा.पा.अ.१-४-९ इत्यत्र **बहुलं छन्दसि** पा.अ. २-४३९ इत्यस्यानुवर्तनात् पतिशब्दमृतेऽपि षष्ठीसमासः विभक्तेरलुक् समाहारद्वन्द्वाभावेऽपि **''द्वन्द्वाच्चुदषहान्तात् समाहारे** ''पा.अ. ५-४-१०६'' इत्यनेन अन्यत्र प्रवृत्तिलक्षणबाहुलकबलेन टच् प्रत्ययः क्लीवता च । यद्वा वाचः इदं वाचम् वाक्कारणभूतमितिभावः **''तस्येदम्''** इत्यनेन षष्ठ्यन्त वाक् शब्दात् अण् प्रत्ययः इदमर्थस्य कारणभूतब्रह्मविशेषणतया तदनुरोधेन क्लीवता । यद्वा वागेव च वाचं आकृतिगणत्वात्, **प्रज्ञा-श्रद्धार्चाभ्यो णः** पा.अ. ५-२-१०१ इत्यनेन स्वार्थे ण प्रत्ययः, सामान्यनपुंसकत्वात् क्लीवता। केचन वाचम् इति द्वितीयान्तं मत्वा तदनुरोधेन वदन्ति इति क्रियामध्याहरन्ति वाचो वाचं वदन्ति इति हि वाक्यार्थः । तदनुचितं वाक्यभेदकल्पनाक्रियाकर्त्रध्याहारकल्पनादि-गौरवदोषग्रस्तत्वात् । यत्तु केचन वाचमिति द्वितीययान्तं मत्वा प्राणः इति प्रथमानुरोधेन इदमपि प्रथमान्तत्वेन विपरिणमयितुं समीहन्ते तदपि पाटलपुष्पयूथमध्यमतस्य पीतपुष्पस्य परिणाम इव हास्यास्पदमेव साहसं, प्रथमान्तवाचकतया द्वितीया विभेक्तेरपि श्रुतावर्थाप्रामाण्यापत्तेः अतो प्रागुदाहतानि प्रथमापरकतया चत्वारि सामाधानान्येव ज्यांयासीति विरम्यते । यत् चर्चितचरं चक्षुषः, नेत्रस्य उपलक्षणतया पञ्चेन्द्रियाणामपि ज्ञानभाजां चक्षुः नेत्रम्, अन्येषां पक्षे कारणम् अर्थात् नेत्रस्य नेत्रं श्रवणस्य श्रवणं रसनायाः रसना घ्राणस्य घ्राणः त्वचस्त्वगिति विवेकः, सः स एव मनोऽधितिष्ठं चेतनघनः पञ्चैन्द्रियैः सह आत्मना मनोयोजयन् तन्माध्यमेन पञ्चानामपि विषयाणामनुभवं कारयति, स एव प्राणं प्रेरयन् तं प्रतिशरीरं गन्तुं प्रणुदति, स एव वाचे विवक्षितार्थान् समर्प्य तामर्थवतीं वक्तुं प्रेरयति स एव देवः रूपसाक्षात्कारे चक्षुः, शब्दसाक्षात्कारे च श्रोत्रं विनियुंक्ते इति तात्पर्यम् । ननु एतस्मिन् उत्तरे आपातरमणीयता उताहो कश्चन निरत्ययः प्रत्ययः? इत्यपेक्षायामाह– अयं निश्चयार्थो निपातः अर्थात् पुरोदितं व्याख्यानं विनिश्चयेनावोचम् न तु यथाकथंचित् पुस्तकानि पठित्वा कुतश्चिच्छ्रुत्वा वा यच्छ्रुतौ

गुरुमुखात् समश्रावि तदेव सुदीर्घतपसा समन्वभावि तदेव हि पृच्छते तेन्यगादि, असावेवहार्थः धीराः, द्वन्द्वसहिष्णवः अतिमुच्य, अतितरां प्रारब्धक्रियमाणानागतबन्धनेभ्यो मुक्ताः भूत्वा, यद्वा अतिमुच्य पूर्वं व्याख्यातं तं परमात्मानम् अतिमुच्य स्वकीयमनोमन्दिरे सम्प्रतिष्ठाय अस्मात्, गर्मबन्धनरूपात् लोकात् दुरन्तपारात् संसारकूपारात् प्रेत्य, प्रकर्षेण ससम्मानं साकेतलोकं गत्वा, अमृता, मरणधर्मभिन्नाः भवन्ति, यद्वा मृतं मरणं प्राणवियोगरूपं न विद्यते तदेषाम् इत्यमृताः प्राणवियोगवर्जिताः, दासभूतानां नित्यपरिकरभावभाजां जीवात्मनां खलु प्राणो भगवानेव तस्मात्ते कदापि न वियुज्यन्त इति हि मन्त्रार्थः ।।श्रीः।।

ननु यद्ब्रह्म तावत् समस्कानां समस्तेन्द्रियाणां कारणमवोचः, यच्च मनोमन्दिरे निधाय धीराः मरणधर्महिताः भवन्तीत्यात्थः तद्ब्रह्म कथं प्राप्तुं शक्यते किं घटपटादि पादार्थानिव तं वयं चाक्षुस् साक्षात्कारविषयं कुर्याम, उताहो इन्द्रादीनिव देवान् वाग्भिः स्तोतुं शक्नुमः, उताहो मनसा चिन्तयेम ? इत्यत आह—

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।**
**न विद्मो न विजानीमो यथैतदनुशिष्यात् ।।३।।**

तत्र चक्षुः न गच्छति (तत्र) वाक् न गच्छति (तत्र) मनः नो (गच्छति) यथा अनुशिष्यात् एतत् न विद्मः न विजानीमः, इत्यन्वयः ।

अथेदानीं पूर्वमन्त्रेण व्याख्यातस्य सकलेन्द्रियनियन्तुः परमात्मनय अनिर्वचनीयतां दर्शयन्ती प्राह तृतीया श्रुतिः । यद्यपि ब्रह्म समस्तानां विषयाणां बाह्यकरणानामन्तःकरणानां तदधिष्ठातृदैवतानां सच्चेतनाप्राप्तिद्वारभूतप्रत्यगात्मनाम् अवभासकम् । ब्रह्म व्यापकं सच्चेतनघनं अप्रमेयचेतनाकम्, एतत्सापेक्षचेतनानीतराणि तथाहि विशुद्धचेतना-घनात्परमात्मनो गृहीतचेतनः जीवात्मा यथा शक्ति सुरेभ्यः सूर्यादिभ्यः प्रयच्छति तत्तत् ग्रहणक्षमतानुसारं चेतनां, ते च सूर्यादयो यमान्ताः दशभ्यो बाह्यकरणेभ्यः चन्द्रादयश्चैत्यान्ताः स्वान्तादिभ्यश्चतुर्भ्योऽन्तःकरणेभ्यस्तस्माल्लब्धचेतनातः यथायोग्यं चेतनांशं वितरन्ति, तेभ्यश्च लभन्ते चेतनां विषयाः, एवं विषयकरणसुरजीवाः अन्योन्यगृहीतचेतनाकतया अन्योऽन्यसापेक्षाः निरपेक्षस्तु एक एव सर्वपरमप्रकाशकः सकलवेदान्तसाधनायासनाशकः श्रीमदयोध्यापतिःविशिष्टाद्वैतापरपर्यायः परब्रह्मरूप-भगवान् रामः । तथा चाह श्रीमदाद्यरामानन्दाचार्यप्रशिष्यदेशिकः श्रीमद्गोस्वामितुलसीदासमहाराजः श्रीमान-सरामायणे ।

**विषयकरन सुरजीव समेता। सकल एक ते एक सचेता।।**
**सब कर परम प्रकाशक जोई। राम अनादि अवधपति सोई।।**
(मानस १/११६/५-६)

तदेव ब्रह्म प्रत्यक्षेण नवागन्तुं शक्यं चक्षुरादीनां तत्र गमनासम्भवात्। अत: प्राह—तत्र तस्मिन् चक्षु:, चक्षुरिन्द्रियम् उपलक्षणतया ज्ञानेन्द्रियपञ्चकं, न गच्छति न याति, ब्रह्म हि निरतिशयमहिमसम्पन्नं व्योमेव व्यापकं कथमल्पशक्तिकं प्राकृतं चक्षुस्तत्र प्रसरेत्, कथं वा चेतराणि श्रोत्रघ्राणरसनात्वग्रूपाणि विषिनुयु: ? इत्यनेन इन्द्रियार्थ-सन्निकर्षस्य ब्रह्मण्यसम्भवात् तत्र, नैयायिकसम्मतं प्रत्यक्षप्रमाणं निराकृतम्। तत्र ब्रह्मणि वक्, जडस्वभावकं वागिन्द्रियं न गच्छति, नावगन्तुं शक्नोति जडस्य हि विशुद्धचेतना ज्ञाने सर्वथैवासामर्थ्यात्, पदमपि वाक्पाणिपादपायूपस्थानां पञ्चकर्मेन्द्रियाणामपुलक्षणं, कर्मणां हि अज्ञानमूलकत्तवात् तदिन्द्रियाणां कथमहो नित्यज्ञाननिधौ ब्रह्मणि प्रसर: स्यात्। न वाक्गच्छतीत्यनेन तार्किकसम्मतं सादृश्यमूलकमुपमानप्रमाणमपि दूरापास्तं तस्य हि वाग्विषयत्वात् वाचस्तु ब्रह्मणि प्रसरासम्भवात्। मन:, सङ्कल्पवृत्यवच्छिन्नमन्त:करणम् न गच्छति नैव गृहीतविषयं भवति, तस्य हि स्वभावतश्चञ्चलत्वादणुत्वाद् व्याप्यत्वाच्च **नोमन:** इत्यनेन अनुमानप्रमाणमपिनिराकृतं, मनसो हि लिंङ्गपरामर्शव्यापारधर्मत्वात् तस्य मनसस्तु परमात्मनि गमनासम्भवात्। मनोऽत्र मनोबुद्ध्यहंकारचित्तानामुपलक्षणम्। इत्थं सर्वेन्द्रियचतुरन्त:करणबहिर्भूतत्वात् परमात्मा श्रुतिभिर्ज्ञातुं शक्य:। अनेन प्रमाणत्रयनिराकरणमूलकश्रुतिवचनत्रयेण प्रत्यक्षानुमानोपमानवादिन: परास्ता:। वस्तुतस्तु परमात्मज्ञाने वेदा: प्रमाणं तदनुकूलानि ऋषिवचनानि स्मृतिपुराणेतिहास निगदितानि। तत्संग्रहेण वेदानुवचनमित्येकं प्रमाणम्। न च न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मन: इति श्रुतिनिषेधानुरोधेन परब्रह्मपरमात्मनो दर्शनानुपपत्या तत्र तत्र इतिहासपुराणादिषु भक्तकृतपरमात्मसाक्षात्कारपरकसहस्राधिकप्रसङ्गानामप्रामाण्यं स्यादिति वाच्यं, श्रुत्या ब्रह्मणि चक्षुर्वाङ्मनसानां गमनासम्भवे प्रतिपादितेऽपि ब्रह्मणस्तत्र गमनासम्भवानुक्त्या दोषाभावात्। अयं भाव:—श्रुतेरस्या: यत् अपरिच्छिन्ने परमप्रकाशपुञ्जे महामहिमनि ब्रह्मणि कामं न यान्तु चक्षुर्वाक्स्वान्तानि तत्र गमने तेषां सामर्थ्याभावात्, परन्तु सर्वसमर्थ: परमात्मा भक्ताननुजिघृक्षु: तेषां परमभागवतानां चक्षूंषि कोटिकामकमनीयधनुर्बाणोपलक्षितसीताभिरामश्यामरूपेणवाचं च श्रीरामायणादिरूपेण मनांसि च सकलकल्याणगुणगणनिलयचरित्रस्मृत्या च गच्छत्येव, इत्येव तस्य भक्त-वैशिष्ट्यं वात्सल्यं च। वस्तुत: ज्ञानिनां समनस्कानीन्द्रियाणि तं विषयं कर्तुं न

पारयन्ति, किन्तु भक्तानां समनस्कहृषीकाणां स्वयमेव विषयो भवति हृषीकेषः समर्थयेते चैतच्छ्रीमद् भागवतमानसे । तद्ययथा कृतभगवत्सक्षात्कारो ध्रुवः प्राह—

**योऽन्तः प्रविश्य ममवाचमिमां प्रसुप्ताम् ।**
**संजीवयत्यखिलशक्तिधरस्वधाम्ना ।**
**अन्यांश्च हस्तचरणश्रवणत्वगादीन् ।**
**प्राणान् नमो भगवते पुरुषाय तुभ्यम् ।।**

(श्रीमद्भागवत ४/९/५)

एवं मानसेऽपि योगिराजजनकः श्रीरामं प्रति प्राह—

**नयन विषय मोकहुं भयउ सो समस्त सुखमूल ।**
**सबद लाभ जग जीव कहँ भये ईश अनुकूल ।।**

(मानस १/३४१)

तस्मादिदं सुस्पष्टं यत् समनस्केन्द्रियाणां परे ब्रह्मणि प्रसराभावेऽपि भक्तिकृपावशंवदः परमेश्वरश्चेन् निजाचिन्त्यशक्तिबलेन साधकस्य चक्षुरादिविषयः सम्पद्यतां, तदा भगवत्साक्षात्कारे न श्रुतिविरोधः । अतो मुण्डकश्रुतिरपि प्राह **यमे वैस वृणुते तेन लभ्यस्तस्यै ईष आत्मा विवृणुते तनुं स्वाम्** । यथा, येन प्रकारेण अनुशिष्यात्, शिष्यमनुशास्त्वाचार्यः, यद्वा अनुशिष्यादिति **व्यत्ययोबहुलम्** पा.अ. ३-१-८५ इत्यनेन उत्तमपुरुषबहुवचनार्थे प्रथमपुरुषैकवचन प्रयोगः, अनुशिष्याम् इति प्रयोक्तव्ये अनुशिष्यादिति प्रायुङ्क्त । एतत्, इमं प्रकारं न विद्मः, केन प्रकारेण विशिष्टाद्वैतं ब्रह्म शिष्यमुपदिशेम इति न बुद्ध्यामहे । कथमित्याह—न विजानीमः, यतो हि तस्य ब्रह्मणो निःशेषेण वक्तुमशक्यत्वात्, यदि वयमेव नैव विशेषेण जानीमः तदा कथमुपदिशेम सामान्यतयाजानन्तो नान्यमुपदेष्टुमधिकृताः वयमिति ध्वन्यते ।।श्रीः।।

एवमात्मनि ब्रह्मणो विशिष्टज्ञानाभावमाकल्य्य यत्किञ्चित् ज्ञानाधारेण शिष्यं प्रति ब्रह्मणि सर्वथैव वक्तुमशक्यत्वसन्देहनिराचिकीर्षया प्राह– यद्यपि पूर्णतया ब्रह्म कोऽपि ज्ञातुं न प्रभवति । किन्तु तत्कृपया प्रयत्नवान् यत्किञ्चित् ज्ञातुं यत्किञ्चित् वक्तुं च क्षमत एव, अन्यथा समस्तोऽप्युपनिषद्भाग एव मोघारम्भः स्यात् ।

**अन्यदेव तद्विदितादथो आविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ।।४।।**

तत् विदितात् अन्यत् एव, अथो (तत्) अविदितात् अधि इति पूर्वेषाम् (सकाशात्) शुश्रुम (वयम् इति शेषः) ये नः तत् व्याचचक्षिरे, इत्यन्वयः।

यद्यपि ब्रह्म प्रत्यक्षानुमानोपमानार्थापत्यनुपलब्धिचैष्टिकादिप्रमाणागोचरतया अत्यन्तमुपदेशानर्हं तथापि त्वया न भेतव्यम् । भवतु नाम पूर्णतया तस्योपदेशाभावः [illegible] निजगिरं पवित्रयितुं त्वां च कृतकृत्यं कर्तुं स्वकीयबुद्धिपात्रतानुपसारं [illegible]प्रसादलब्धत्वदुपदेशानुरूपज्ञानसामग्रीकस्त्वामुपदिशामः त्वया च सावधानेन श्रोतव्यम् । तत्, उपदेशविषयं ब्रह्म विदितात् विदि क्रियाकर्मभूतात् नश्वरात् संसारात् अन्यदेव विलक्षणमेव ब्रह्म नैव संसार इव जन्ममरणकूपे संसरति **विजरो विमृत्युर्विशोकः** इति श्रुतेः । अविदितात्, विदि कर्मतो बहिर्भूतात् अक्षरात् जीवात्मनः अधि, उपरिवर्तमानं ब्रह्म । इह शरीरे खलु द्वौ पुरुषौ तिष्ठतः क्षराक्षरौ क्षरो नाम क्षरणक्रियाश्रयः नाशवान् अष्टप्रकृतिनिर्मितभूतसमुदायः क्षरतीति क्षर इति व्युत्पत्तेः । अपरश्च अक्षरः सौम्यो जीवात्मा **नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः** इति स्मृतेः । इदं खलु ब्रह्म परमात्मनामधेयं भगवच्छब्दवाच्यं क्षराक्षरसंज्ञाभ्यां संसारजीवात्माभ्यां चिदचिद्भ्यां विलक्षणम् क्षरः खलु सर्वैः ज्ञातः अचित् अक्षरो जीवात्मा सूक्ष्मत्वात् अविदितप्रायः **श्रुत्वाप्येनं वेदं न चैवं कश्चित्** इति स्मृतेश्च, परमात्मा द्वावप्यतीतः तथा चाह पुरुषोत्तमयोगे भगवान् —

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।**

(गीता १५/१६/१७)

इति, इत्थं पूर्वेषां पूर्ववर्तिनामाचार्यणां सकाशात् गुरुशिष्यपरम्परारातः शुश्रुम आकर्णयामासिम इदं त्वां सम्प्रदायपरम्पराप्राप्तमेव क्षराक्षरातीतं चिदचिद्विशिष्टं ब्रह्मोपदिशामः न त्वशास्त्रीयं स्वकल्पितमिति भावः । ये परमाचार्याः नः अस्मभ्यं चिज्ञासुभ्यः तत् ब्रह्मज्ञानं विशिष्टाद्वैतमूलकं व्याचचक्षिरे व्याचक्रुः।।

एवं विदितात्क्षरसंज्ञात् भूतसमुदायात् अचितः विलक्षणं, तथा च अविदितात् विदिक्रियाकर्मबहिर्भूतात् अक्षरसंज्ञात् जीवात्मनश्च चितः विलक्षणम्, अन्तर्यामितया प्रतिशरीरमध्यस्थगुणत्रयवर्जितं विशुद्धचेतनघनं सगुणसाकारे सर्वथैनानुपहितं ब्रह्मेति मन्त्रार्थो व्याख्यातः । केचिदिह विदितादित्यस्य हेयादिति अविदितादित्यस्य उपदेयादिति

